श्रीरस्तु.

1958

# कालवधम्.

श्रीकृष्णलीलाशुकविरचितम्

## प्रथमः सर्गः

शैलेन्द्रमूर्धनि धृताद्भुतदिव्यवेषं देवं विलोक्य निखिलव्रजबालरत्नम् ।
पप्रच्छ विस्मयरसेन परीतचेता बद्धाञ्जलिर्व्रजजनः स्वयमेव कृष्णम् ॥ १ ॥

देव त्वदर्चनकृतीकृतजन्मनां नः प्रापुः समस्तविषयाणि कृतार्थभावम् ।
किं तु त्वदीयवदनाम्बुजदिव्यवाणीमत्यद्भुतामनुबभूषुरलं जनोऽयम् ॥ २ ॥

इत्यात्मना निगदितं सकलव्रजानां विस्मापनाय वदनामृतमाकलय्य ।
अन्तर्निगूढहसितेन जगत्त्रयस्य नाथेन निर्मितमिदं श्रवणामृतत्त्वम् ॥ ३ ॥

मन्दस्मितस्नपितमुग्धमुखारविन्दं मन्दानिलाकलितकोमलकाकपक्षम् ।
अङ्गं तदेतदखिलव्रजलोचनानां मङ्गल्यमस्तु किमतः परमस्ति कृत्यम् ॥ ४ ॥

पिञ्छावतंसरचनोचितकेशपाशं पीनस्तनीनयनपङ्कजलोभनीयम् ।
मन्दारवर्षभरितं सुरसुन्दरीभिर्मन्दं मुहुः क्वणितवेणुरसाभिरामम् ॥ ५ ॥

किं चेदमद्भुततरं चरितं पुरारेः शृण्वन्तु हन्त मधुकैटभविद्विषश्च ।
सर्वेऽपि घोषनिलयाः सहबालवर्गैर्नित्याश्रिताय च सिताय च दिव्यधाम्ने ॥ ६ ॥

ईशः कदाचिदचलेन्द्रमहासभायां गीर्वाणमौलिमणिमेदुरवेदिकायाम् ।
सख्या सहैव सरसीरुहलोचनेन तत्तत्स्तुतीरनुभवन् जनमन्वगृह्णात् ॥ ७ ॥

मन्दस्मितद्युतिशतप्रचयप्रचारैर्मौलीन्दुदीधितिविलासविहासदक्षैः ।
आरञ्जयन्निव मृजन्निव दिग्विभागानालेपयन्निव हरन्निव देवदृष्टीः ॥ ८ ॥

विस्मारयन् विलसितैः स्मरदाहवार्तां सेवाविलासमयलास्यरसज्ञवर्गम् ।
नर्मोक्तिभिः प्रमदयन्नलिनारुणाक्षमालोकयन् गिरिसुताननमन्तराले ॥ ९ ॥

तत्तत्तथाविधमहोत्सवमण्डितायां सेवानतैर्दिविषदां निकरैः सदस्याम् ।
आविर्बभूव किमपि ध्वनितं सुदूरादप्यैश्वरं हृदयमाचलयत् क्षणेन ॥ १० ॥

स्थित्वा मुहूर्तमचलेक्षणमम्बुजाक्षं वामांसकूटतटलग्नमथावरोप्य ।
पाणिं निजं पुररिपुः परिवारराजं साङ्गं सरोषमिव नन्दिनमन्वपश्यत् ॥ ११ ॥

सोऽपि स्वयं सपदि दूरतरोऽभ्युपागात् प्रौढप्रणामनिपुणाञ्जलिमञ्जुमौलिः ।
आज्ञापयन्त्व किमु दासजनाय देव दिव्येक्षणानि लसितान्यधुनेत्यवादीत्(?) ॥ १२ ।

रोषाङ्कुराङ्कितमनङ्गरिपोर्ललाटमालोक्य किं किमिदमित्यलमुत्सुकानाम् ।
विस्रम्भतो गतभियामपि देवतानां सद्यो मनांसि सहसाध्वसतामवापुः ॥ १३ ॥

भक्तैकवश्य भवदीयपदारविन्दरागारुणामलमतीनपि दासवर्गान् ।
आहन्ति हन्त हतकः किमु कालकालः कामान्तकेति विनिशम्य विभुश्चचाल ॥१४॥

तस्मिन् रुषातिविकटभ्रुकुटीकुटीभिर्लोठल्ललाटतटलोठिनि कालकण्ठे ।
ईदृग्विधैरलमलं रुषितप्रचारैः कालान्तकः किल कियानिति कृष्ण ऊचे ॥ १५ ॥

ज्ञात्वा निमित्तमथ रोषविजृम्भणस्य स्वात्मापराधपरिशङ्कि मनो विहाय ।
ईषद्धठं हरबलेन विचिन्त्य कालमाश्वस्य वाक्यमिदमाह ततः स नन्दी ॥ १६ ॥

तं सर्वलोकजयिनं मदनं नवेन नेत्राग्निलेशविभवेन तथाकरोद्यः ।
तस्य प्रभोः पुरहरस्य पुरः सहायाः सन्तः पुनीतनिजबाहुबलं सुरेन्द्राः ॥ १७ ॥

नन्द्याज्ञयाथ निखिलैरपि लेखिवर्गैर्देवौ प्रणम्य सहसा धृतहेतिजातैः ।
ताभ्यां सहैव चलितं विजयाय शत्रोः श्रीकण्ठदासजनधर्षणदूषितस्य ॥ १८ ॥

1958



त्रायस्व चन्द्रतिलकेत्यसकृन्निनादमार्तानननोद्गतमनीचतमं निशम्य ।
हा हा धिगेवमतिमन्थरगामिनोऽस्मानित्याजगर्ज स जनोऽतिमनोजवोऽपि ॥ १९ ॥

तामेव शब्दपदवीमनुसृत्य सर्वे गीर्वाणवीरवृषभाः सह नायकाभ्याम् ।
अन्योन्यघट्टितरवैर्निजवाहनानामाभीषयन् जलधरान् गगनेचरन्तः ॥ २० ॥

सा वाहिनी सपदि वैरिपुरप्रवेशं प्राप्ता वितत्य परितोऽपि शरप्रवाहान् ।
तिष्ठ प्रदर्शय भुजं समरप्रयाणमेषामलं खलु मुनौ तव तेजसेति ॥ २१ ॥

कालोऽपि कालकुटिलाग्रविषाणकोटिकाठोर्यकातरितयोगिनि कासरेन्द्रे ।
प्रत्यन्तदन्तपरिपाटिविजिह्मजिह्वालेलिह्यमानरिपुलोहितभाजि रेजे ॥ २२ ॥

सम्मन्यते स्म सदृशापि न तीक्ष्णधारानिष्ठ्यूतनिष्ठुरशिखानलवत्कृपाणिम् ।
भूयस्तरां भ्रमितभीषणचक्रहस्तं क्रोधेन शूलकलिताग्रकरं हरं वा ॥ २३ ॥

तस्येक्षणे विजलकूपसहायवेषे प्रामोचितोऽपि विशिखः शिववाहनेन ।
सद्यस्समुद्गतजपारुणशोणिताम्भःपूरेण पूर्णमवलोक्य चिरं व्यहासि ॥ २४ ॥

तत्कालमेव गुरुवेगमनूद्भवद्भिर्बाष्पाम्बुभिर्महिषलोचनगर्तयुग्मम् ।
रेजे कुमार किमिदं कलुषांभसा ते गृह्णीष्व शुभ्रजलमेतदितीव पूर्णम् ॥ २५ ॥

मृत्युः पुनः परिविमृज्य निजक्षेणं तद् बालोऽसि हन्त सदृशो न हि तादृशानाम् ।
अभ्येत्वयं तव पितैकशरावकृत्ततादृक्पुरत्रयविजृम्भ इति व्यगर्जत् ॥ २६ ॥

तस्यावलोक्य तरुणेन्दुकलावतंसं तस्यान्तिके सरसिजारुणलोचनं च ।
आसीद् द्वितीयमपि नेत्रमदभ्ररोषरागत्विषा भरितमन्यदिव क्षणेन ॥ २७ ॥

अत्रान्तरेऽपि रभसं परिवृत्य नन्दी कण्ठे निजे समनुगृह्य मुनिं तमार्तम् ।
नाथाग्रतोऽपि गतवान् नयनत्रयेण संपूजितः स्मरजिताचितसंभ्रमेण ॥ २८ ॥

मुक्तः स मृत्युमुखगह्वरतो मृकण्डोः पुत्रः पुरत्रयजिता निजवाहनार्धे ।
आरोपितः श्रितजने करुणामयेन सोऽप्यस्य पादकमले प्रणिपत्य तस्थौ ॥ २९ ॥

कालस्तु कोपकलिलाकुललोचनार्ककान्त्या जिगाय तडिदार्द्रयुगान्तमेघम् ।
आलोकयच्च निखिलां निजचित्रगुप्तगुप्तां चमूं चलकृपाणलताकरालाम् ॥ ३० ॥

क्षिप्तः प्रसार्य शमनेन मुनौ स्वपाशः क्षेपिष्ठमेत्य चकृषे जहृषे च तेन ।
यस्मिन्नुलूखलविलास इति प्रतेने स्कन्देन नामगणपाशशिशौ यथार्थम् ॥ ३१ ॥

लज्जन्न तेन समराय स नोन्ममज्ज मृत्योर्जनः स तु दृढं प्रगृहीतपाशः ।
कालेन यत्खलु पुरा विहितं तदेव तस्मिन्नयं तमतिदेष्टुमभीष्टवान् हि ॥ ३२ ॥

आकृष्य धावितुमथारभते स्म रोषान्मृत्युस्तमस्तबलभङ्गमुदर्णिनादम् ।
तं भूतमेव परिवार्य सहस्रशोऽन्ये तस्थुर्हरस्य सचिवा हरजानुशिष्टाः ॥ ३३ ॥

उच्छूनशस्त्रशतशोभितहारिहस्ता रोषाभिरूपितकषायविचित्रनेत्राः ।
उन्निद्रकेसरिनिनादविपूरिताशाः कष्टं पुरो यमभटाः प्रमथौघमापुः ॥ ३४ ॥

प्रस्यन्दितालेगमदाम्बुविमर्दकण्डूमाखण्डितारिजनपाणिरुहैरपास्यत् ।
आलोलगर्वितकरः करिणां निकायः कालस्य कोविदनिषादिभिरभ्यशोभि ॥ ३५

तेषां मदान्मुहमुहेति मुहुः प्रवृद्धसंगर्जितानि निखिले गगने विचेरुः
भूयोऽपि बाढनिनदैरतिसङ्कटं तत्संत्यज्य दूरमवगन्तुमिवानुमृज्य ॥ ३६ ॥

उन्मुच्यमानमदशीकरवर्षधारैरुद्गर्जदिग्गजगणाननुनादयद्भिः ।
हैमीः कुथाह्युपैतैर्गगनेचरद्भिर्विद्युद्गताामिव घनैर्नितरां चकाशे ॥ ३७ ॥

तेषां दिवं सरभसं परितः प्रयाता सिन्दूरधूलिरधिवार्य पथं चचार ।
वीरागमप्यसनतत्परताभ्युपेताः सीमन्तिनीर्दिविपदां प्रति भूषयन्ती ॥ ३८ ॥

सा व्योम्नि हन्त विसृता सकलेऽपि सिक्ता मायत्करीन्द्रकरधूतमदाम्बुवर्षैः ।
व्योमाङ्गणं बत विपिच्छिलमेव जातमित्यालपद्भिरमरैरवलोकिताभूत् ॥ ३९ ॥

रेजुर्हया रचिततादृशवेगचारैर्वायुं विजेतुमिव वायुपथे प्रविष्टाः ।
हेषाभिरूर्जिततमाभिरुपात्तरोषं तं भर्त्सयन्त इव मूर्ध्नि निधाय पादौ ॥ ४० ॥

प्रत्येकमेव गगनं ग्रसितुं समर्थान्यत्यायतानि परिणामपरायणानि ।
यानानि काञ्चनमयानि विरेजुरेषां चक्राणि वीक्ष्य निजचक्रमवैत्र चक्री ॥ ४१ ॥

अभ्यायतीमिति चमूमभियातिवर्गामङ्गैश्चतुर्भिरभियाति सुरावली स्म ।
न त्वेव जातुचिदवाप स साध्वसत्वं धीरे कृतास्थितिभियः खलु साध्वसत्त्वम् ॥४२॥

अन्योन्यमद्रितटचारुशिलाविशालवक्षःस्तटेषु समराग्रकिणाकरेषु ।
अभ्यस्यतामसिलतानिशिताग्रदंष्ट्रैरन्तर्न गन्तुमभवन् सहसा समर्थाः ॥ ४३ ॥

बाणैः परस्परपराहतवेगवीर्यैः सेनान्तरालगगनं परितः प्रपूरे ।
तेषां मिथो युधि विलोकनलम्पटानां प्रत्यूहतां क्षणममी अभजन्भटानाम् ॥ ४४ ॥

शाताम्रशस्त्रशतजर्जरितैर्द्विपेन्द्रैरुत्पादिता रुधिरशैवलिनीप्रवाहाः ।
स्वर्गापगासलिलसंभ्रममेव जेतुं शक्ता न ही रिपुवधूनयनाम्बुपातान् ॥ ४५ ॥

युद्धश्रमेण परिकर्शितदर्शनानां शान्तिं जहार समधिप्रमथाधिपानाम् ।
आलोकितं शशिकलेन्दुदृशा दयार्द्रं यां योगिनः सकृदवाप्य धुनन्ति बन्धम् ॥४६॥

मुक्त्वा वशं मम कथं विगमो ह्यसूनां सेनास्विति प्रतिविचिन्त्य यदास्त कालः ।
कामारिसेवकजनेन तदा तदीयं सैन्यं व्यनीयत विभिद्य सुरेन्द्रपक्षम् ॥ ४७ ॥

कालः स्वयं मकरकेतुरिपोः पुरस्तादस्त्रैर्निरस्तगुणबाणगणः प्रतस्थे ।
एह्येहि दर्शय तृतीयमहो चतुर्थमक्षीति रूक्षमभिलप्य शरान्मुमोच ॥ ४८ ॥

तान्मुञ्चतः सरभसं पुरशासनाय तस्याभवन्निषुधयः खलु भूतपूर्वाः ।
ज्ञात्वैव तत्सकलवित्स तु तान् समस्तान्तस्मै मुधोत्सुकतया धनुषादिदेश ॥४९॥

तीक्ष्णात्मकाः परिचलाः स्वयमेधिता ये सत्यं न तेन वितुदन्ति परप्रयुक्ताः ।
कालं तथा हि विमुचापगुणप्रयुक्ताः संप्राहरन्त परितो निजबाणवीराः ॥ ५० ॥

दण्डं निजं पुरहरस्य पुरः प्रमोक्तुमाशङ्कते स्म शरनीतिमनुस्मृतोऽसौ ।
कोपादथापि मुमुचे तमथान्तराळे पाणावपादित निजे किल दण्डपाणिः ॥ ५१ ॥

दण्डोद्यतं तं परितश्चरन्तं निजो गणो वीक्ष्य मृडाङ्कणेषु ।
क्षणं क्षिणोत्येष मृडैधतास्मान् कालः किलेत्याशयसंशयोऽभूत् ॥ ५२

हरशूलशक्तिमभिनन्द्य मन्दिरं निजमागतोऽयमहृदय्य तेजसा ।
शिवदिव्यदेहमनुसंशयेक्षणादखिलामरार्थिनिचयाक्षिसाक्षिणा ॥ ५३ ॥

इति श्रीकृष्णलीलाशुकस्य कृतौ कालवधे प्रथमः सर्गः



# कालवर्धम्

*(Continued from 312th page)*

द्वितीयः सर्गः

इति चित्रमन्त्रमनिकृत्तशात्रवं शशिमौलिमेत्य शतपत्रलोचनः ।
परिरभ्य गाढमथ हर्षवारिभिः ललिते निजेक्षणयुगे क्षणं दधे ॥ १ ॥

पुलकोद्गमेन गुरुणा परिष्कृतं परमेश्वरस्य परमः पुमान् वपुः ।
अधिरूढहर्षमवलोक्य सादरं प्रशशंस सख्यपरतन्त्रमानसः ॥ २ ॥

इदमादिदेव न परेण चेतसाऽप्यधिगम्यमीश किमुतातिविक्रमैः ।
अथवा कियन्नु तव कालकर्शनं सकलं जगत्सपदि संहरिष्यतः ॥ ३ ॥

पुरमर्दने खलु पुराह तादृशं तव चापदानमिति दानवद्विषः ।
परिहर्षफुल्लनयना विनिश्चितास्तदिहाधुनावसितमेव मन्वते ॥ ४ ॥

तव दिव्यपाणिपरिधूतनिर्लसच्चितशूललूननिजकायबन्धनः ।
शमनोऽयमस्तशमनां गतिं गतो न हि निग्रहो ह्ययमनुग्रहः परम् ॥ ५ ॥

पुरदानवेन्द्रतनुभूतिविभ्रमानधुनापि दिव्यवपुषा दधासि यत् ।
ननु लोकवल्लभ तदेव ते पुनः परिकीर्तयत्यलमनुग्रहं जने ॥ ६ ॥

न तथाद्भुतं तव ललाटलोचनं सुचिरं विचार्य परिचिन्तयामहे ।
यदिदं विभावसुशिखैकविग्रहं परिशीतयत्यखिलमेतदद्भुतम् ॥ ७ ॥

त्रसति प्रिया तव गलानुचुम्बितं बत कालकूटमिति कूटवार्तया ।
यदिदं लसत्कुवलयोदरद्युतेर्निजनेत्रपातललितस्य जृम्भितम् ॥ ८ ॥

कथमन्यथा यदि भवव्यपोहिनां हृदयावलिस्फुटमिहैव दीव्यति ।
विजहाति मोहमुपयाति तादृशं कमपि प्रबोधनविलासविभ्रमम् ॥ ९ ॥

मलयानिलावधुतजाह्नवीजलैर्गिरिजावलोकनभयातुरैरिव ।
गुरुनीरजन्ममकरन्दचन्द्रकैरभिषिच्यसे रणपरिक्रमच्छिदे ॥ १० ॥

परिरब्धसौरतरुसूनमञ्जरीव्यवगाहितामरसरित्तटान्तरम् ।
गुरुगन्धभारत इवातिमन्थरः पुरतः समीरणरसः समेति ते ॥ ११ ॥

अमुना न तादृगनिशं सुखात्मनस्तव कल्प्यते रतिरनल्पकान्तिना ।
प्रमदप्रनृत्तवनिताभृता यथा निजभूषणीयफणिना ससंभ्रमम् ॥ १२ ॥

तव शोभते रिपुजरक्तबिन्दुभी रणसम्भ्रमेण कृतसङ्क्रमैर्वपुः ।
इह यत्र घर्मजलजालकानि भान्त्यनुपद्मरागमिव मौक्तिकान्यहो ॥ १३ ॥

तव पादपद्मयुगलैकसेवनव्रततन्त्वताविमलयोगिनां फलम् ।
कितवंतु हन्त किमितीव मौलिना दधसे सदापि किमिदं त्वदीहितम् ॥ १४ ॥

अणु वा तवास्तु महदेव वा वपुर्निजचित्तविभ्रमरसानुसारिणाम् ।
अपि तु त्वदीयमविखण्डितं पदं कतिचिद्वदन्ति कवयः पुरातनाः ॥ १५ ॥

इति सख्युरक्षतवचःसुधारसं परिचुम्ब्य विस्मृतरुषारसान्तरः ।
अनुरागसान्द्रमनुरञ्जितास्मितं सुरमण्डलीं सुरपतिर्व्यलोकयत् ॥ १६ ॥

अथ सुप्रसन्नहृदये जगत्पतावविराममच्युतविलोकनोद्यते ।
विपुलप्रफुल्लनयनाः सरस्वतीमिति देवता निजगदुः सुधामयीम् ॥ १७ ॥

युवयोः परं किल पदं गुहाशयं मुनयो गृणन्तु निजभावभूषणाः ।
अविभिन्नयोरपि भिदामुपेयुषोरपरेऽपि धामनि वयन्तु बालिशाः ॥ १८ ॥

अथ गाढमश्रुतचरीर्गिरः परं विनिशम्य नः प्रवहता प्रसन्नताम् ।
निजकौतुकेन चलितान्तरा वयं न हि जोषमेव भवितुं क्षमामहे ॥ १९ ॥

यत एतदाविरभवज्जगत्त्रयं परिपालितं लसति येन तेजसा ।
अपि यत्र निर्वृतिमुपैति मायया तदिदं द्विधाकृतमहो निजेच्छया ॥ २० ॥

मदनाङ्गभङ्गिनयनाय ते नमो मदनाङ्गसङ्गिनयनाय ते नमः ।
परिपाटितान्धकजनाय ते नमः परिपालितान्धकजनाय ते नमः ॥ २१ ॥

पशुमोचनैकनिरताय ते नमः पशुपालनैकनिरताय ते नमः ।
गुरुशैलवन्दनपराय ते नमो गुरुशैलचालनपराय ते नमः ॥ २२ ॥

कुमदोदयद्युतिमयाय ते नमः कुमुदोदयद्युतिमयाय ते नमः नमः ।
भुवनोपसंहृतिसखाय ते नमः भुवनोपसंहतिसखाय ते नमः ॥ २३ ॥

इति मण्डले स्तुवति नाकपालिनां श्रुतिमण्डनाय युगलस्य तेजसा ।
सुरसिद्धचारणविलासिनीलताकरपल्लवेषु कुसुमानि रेजिरे ॥ २४ ॥

अथ तान्यघोषत भृशं महाफलं सपदि स्वयं त्रिभुवनेषु दुर्लभम् ।
यदमीभिरद्भुतसमृद्धसौरभैर्दधतुः प्रसादमखिलेश्वरेश्वरौ ॥ २५ ॥

अपि तेषु लोलुपतयेव मन्थरः पवनश्चचार विनिगूढचापलः ।
अपि च प्रसङ्गमुपजीव्य तत्क्षणं कुसुमेषु रेभिरुदबन्धमानिनीः ॥ २६ ॥

अधिलास्यमुल्लसितमप्सरोगणैरभिकालवैरिविलसद्विलोचनैः ।
नयनाग्निदग्धवपुषा मनोभुवा नियतं प्रसादयतु मेवचोदितैः ॥ २७ ॥

मणिकोणताडितसुरेन्द्रदुन्दुभेर्विलसद्गभीरतरभाङ्कृतिस्वनैः ।
ककुभः करीन्द्रनिजकर्णनिर्गतैः कुलशैलकन्दरदरीषु बभ्रमे ॥ २८ ॥

महसोः प्रसादनपरेण चेतसा गणिकेव लासकपदं सुरावलिः ।
अचलानि यानि च मनांसि योगिनामपि तानि लास्यमभजन्त भक्तितः ॥ २९ ॥

लोचनैरुभयदिव्यविग्रहव्यापृतव्यतिकरेऽनुरज्यत ।
वज्रिणः पदमभीप्सवोऽपि ही नापराधपदवीं गताः सुराः ॥ ३० ॥

वालचामरकराः सुराङ्गना मारुतस्य चिरमीप्सितं दधुः ।
येन सोऽयमखिलेन्द्रविग्रहावालिलिङ्ग नवरोमविक्रियौ ॥ ३१ ॥

मन्द्रमिन्द्रजलदा निनादिनो मन्दवर्षमवहन् सुधारसैः ।
चन्दनद्रवमयेन वारिणा चन्द्रचूडमपरेद्युऽपूजयन् ॥ ३२ ॥

सम्भ्रमोत्तरतरं सपर्यया सज्जनाः सकललोकवल्लभौ ।
सुप्रसादसुमुखौ परस्परालोकनेन परिवव्रुरादृतौ ॥ ३३ ॥

नृत्यति प्रमथयोषितां गणे द्वैधमद्भुतरसो दशामभूत् ।
शङ्कते मम तु हन्त मानसं शङ्करादचलदद्रिजेक्षणम् ॥ ३४ ॥

शरणमुपसमेतैः चन्द्रगङ्गोरगाद्यैः समभिरुचितदेशे शोभिभिः सेव्यमानः ।
जलदमधुरधाम्ना रत्नभूषामयेनाप्यपरवपुरशोभीदभ्युपेतश्शिवाङ्घ्रिः ॥ ३५ ॥

इति श्रीकृष्णलीलाशुकस्य कृतौ
कालवधे द्वितीयः सर्गः



# कालवधम्

## तृतीयः सर्गः

अखिलमुनिजनानामन्तरन्वेषणीयं निखिलनिगमवाचां विभ्रमैर्लक्षणीयम् ।
नयनपथमुपेतं मङ्गलानन्दपूरं सपदि तमनुभूय व्याजिगीषुर्मुनीन्द्राः ॥ १ ॥

वृष इति निजसंज्ञां बिभ्रतः पुण्यराशेः श्रुतिनिकरगिरां वा पक्षपातं गतानाम् ।
अनिशमनुपुनन्तां पार्श्ववक्षःप्रदेशौ ललितचरणपद्मापाङ्गलीलाविहारैः ॥ २ ॥

फणिफणमणिलक्ष्मीपुञ्जमञ्जूकृतेन प्रतिभयललिताङ्गं दन्तिचर्माम्बरेण ।
मधुरममरनारीमन्थरापाङ्गलीलाव्यतिधुरितविहारागारपीताम्बरेण ॥ ३ ॥

गिरिवरनिजकन्यालोचनच्छायपूरैरपि च भुजगहारैरादृतं बाहुमध्ये ।
निचितमुरसि लक्ष्म्या दिव्यलीलारविन्दैरविरतवनमालाषट्पदान्वारयन्त्या ॥ ४ ॥

वृषभककुदकूटे शैलकन्याकुचान्ते मुनिशिरसि करे च श्रीपतेर्दण्डपाणिम् ।
गलितरणनिरोधैर्बाहुभिर्व्याजजृम्भाव्यतिवलितविहारैर्गूढमाश्लिष्टकान्तम् ॥ ५ ॥

विधृतरुषितगण्डैः केवलेन्दोरिवाङ्कैः शिवमकृशदयार्द्रैर्लोचनांशुप्रचारैः ।
अमरनगरनारीनेत्रसम्भावनीये विकचकमललीले लोचने लालयन्तम् ॥ ६ ॥

सुरसरिदुरुवीचीमज्जनोन्मज्जनाभ्यां विलसितशशिलेखोन्मुद्रयोद्यत्कपर्दम् ।
प्रणयकुपितलक्ष्मीपादपद्मावपीडप्रकटपदविभूषाडम्भिलीलाकिरीटम् ॥ ७ ॥

स्तुतिरिति गुणलीलावर्णनैकावतारा तव वरद गुणोक्तिर्नैव तत्त्वानुबन्धा ।
न खलु निखिलमायामोहदाहव्यतीते भवति भवति वाचां गोचरः को विभावः ॥८॥

अपि तु विकसितं नः पुण्यपाकेन केनाप्यखिलविषयदूरं तत्त्वमास्ते पुरस्तात् ।
स्तुतिरपि ननु किं वा सैव मुख्यापि लोके यदुत गुणगणानां कोऽपि मिथ्याप्रवादः ॥

तदिह भवतु यावद्देव नस्तावकीनप्रकटमहिमधीराम्भोधिकल्लोललेशः ।
निजरुचिपरितुष्ट्याशंसितुं लम्पटानां सहजसचिवराजस्तावकीनः प्रसादः(?) ॥१०॥

सृजसि जगदशेषं यत्कटाक्षावजृम्भं प्रमदयति तदेतद्यन्मुखेन्दुप्रसादः ।
हरति च पुनरन्ते यत्कटाक्षान्तरार्थो जयतु भुवनभीजं तत्सितं चासितं च ॥११॥

सुकृतिकृतिरशेषा यत्प्रसादे कृतार्था विपुलविभवलक्ष्मीर्यत्पदाम्भोजरेणुः ।
सुरवरवरनार्यो यत्प्रभावांशलेशो जयतु भुवनबीजं तत्सितं चासितं च १२ ॥

सकलभुवनभेदो यद्विनोदावतारः कशयति निजशाठ्यं यत्प्रभाडम्बगन्धः ।
गलितविविधबन्धो यत्पदप्रौढिभूमा जयतु भुवनबीजं तत्सितं चासितं च ॥ १३ ॥

रजसि समनुरक्तो यद्विलासैकभागः तमसि निशिचराभा यद्विमोहैकशक्तिः ।
परिविलसति सत्त्वे यत्प्रबोधाद्भुतश्रीः जयतु भुवनबीजं तत्सितं चासितं च ॥ १४॥

अचलनियमनिष्ठैरर्च्यते यत्पदाब्जं मधुरतररसज्ञैर्वर्ण्यते यद्विहारः ।
न हि परमधुनापि प्रेक्षते यस्य तत्त्वं जयतु भुवनबीजं तत्सितं चासितं च ॥१५॥

दवहुतवहधूमश्यामलं यत्सुतेजो नियमिहृदयशाणप्रस्फुटा यत्प्रदीप्तिः ।
अचलविमलसौख्याम्भोधिनिर्यत्स्वरूपं जयतु भुवनबीजं तत्सितं चासितं च ॥१६॥

मनसि निखिलनॄणां यद्वपुः प्रादुरास्ते सकलभुवनमध्ये यद्वपुर्नैव माति ।
हरिवरुणयमादिव्याप्ततिर्यत्प्रतापो जयतु भुवनबीजं तत्सितं चासितं च ॥ १७ ॥

प्रकृतिविकृतिरूपैर्गूहितं यन्महत्त्वं निकृतिरतजनानां दुर्गतं यद्विभुत्वम् ।
सुकृतिहृदयसेवाभाजनं यत्प्रभुत्वं जयतु भुवनबीजं तत्सितं चासितं च ॥ १८ ॥

वितरति चिरकाराबन्धनं यद्विवेक्षा प्रदिशति नवविद्यासम्पदं यद्व्यपेक्षा ।
विसृजति निजशश्वन्निर्वृतिं यत्समीक्षा जयतु भुवनबीजं तत्सितं चासितं च ॥ १९ ॥

तृणमपि न हि शक्तं लङ्घितुं यन्नियोगं मुनिरपि न हि शक्तो वेदितुं यत्प्रयोगम् ।
वयमपि न हि शक्ताः शंसितुं यत्सुयोगं जयतु भुवनबीजं तत्सितं चासितं च ॥२०॥

सुरनिकरकिरीटभ्राजि यत्पादपीठं रुचिभिरनिशमात्मश्लाघि यत्पादपीठम् ।
पुलकितमिव हर्षोत्कर्षि यत्पादपीठं जयतु भुवनबीजं तत्सितं चासितं च ॥ २१ ॥

निजरससमुपात्ताकारवान् यद्दयाब्धिर्निजकरधृतसिद्ध्यत्किङ्करो यद्दयाब्धिः ।
निजजनभवबन्धध्वंसनो यद्दयाब्धिर्जयतु भुवनबीजं तत्सितं चासितं च ॥ २२ ॥

कलितभुजगभूषं कौस्तुभोल्लासि वत्सं कपिलविपुलनेत्रे कञ्जकम्रारुणाक्षम् ।
शशिशकलललामं चारुराजत्किरीटं पदमिदमुदितं नः पातु पुष्टं पुरस्तात् ॥ २३ ॥

सजलजलदनीलं शारदाम्भोदशीलं कबलितनवनीतं कालकूटानुरागि ।
घुसृणमसृणवेषं घूर्णितोद्भ्रमिभूषं शरणमिदमिदं नः शाश्वतं धाम भूयात् ॥ २४ ॥

अविचलिततरङ्गोत्तुङ्गगङ्गावतंसं सुमधुरमधुधारासारसूनावतंसम् ।
कलितशशिकलांशुश्रेणिसञ्चारगौरं रुचिरविविधरत्नप्रोद्धतोद्धारशारम ॥ २५ ॥

विलसदमरनारीहस्तयन्त्रावमुक्तप्रकटकुसुमयन्त्रावर्षधारानुसारि ।
प्रबलविपुलभूयोविस्मयाविष्टनृत्यन्निखिलसुरजयोक्तिश्रेणिनीघूर्णकण्ठम् ॥ २६ ॥

स्मितरसपरिपूरोद्रेकमुद्रातिभद्रक्षितिजलधरकन्यालोचनोल्लोभनीयम् ।
अनिशनिनदमानामन्दनिर्हारिभेरीभवभरितगभीरापारभाङ्कारभारम् ॥ २७ ॥

इह मयिकरुणायाश्चारुनिष्यन्दपूरं विकचकलकटाक्षैः सर्वतः सन्दधानम् ।
सकलसुकृतपाकोद्रेकतोऽग्रेकृतं नः परमवतु कृतं नः पूर्णनिर्वाणमेतत् ॥ २८ ॥

स्तोतर्येवं मुनीन्द्रे गुरुतरकरुणासान्द्रमुत्सृष्टभेदं
तत्तत्वं प्रादुरास्ते प्रतिदिशमभितो धाममात्रं दधानम् ।
भूयोऽपि द्वैतमेव व्यलसदथ मुनिः प्राप्तनिर्वाणमार्गं
मत्वात्मानं प्रमोदव्यतिकरमगदद्गद्गदो भावभेदैः ॥ २९ ॥

अथ प्रयातेष्वखिलेषु नाकिषु द्वितीयवेषे जलधिं प्रतीयुषः ।
तस्मिन् पुनः श्वेतवने शिवः स्वयं लिङ्गात्मना सन्निदधे मुनीच्छया ॥३०॥

नित्याकृत्तविकाससान्द्रमधुरोद्बोधस्ततो ललितो
निस्तृष्णप्रबलप्रभावमहितैरच्चाचलैः शुद्धितः ।
रम्यो लीनभवः शिवः सुमनसां चक्रे शमेकः पुरा
राताज्ञानिमुदोनिशेशरचनातोषीस्तुतस्सद्भिराम् (?)[1] ॥ ३१ ॥ (चक्रबन्धः)

इति श्री कृष्णलीलाशुकस्य कृतौ
कालवधे तृतीयः सर्गः

1. अस्मिन् चक्रबन्धोद्धारे "कृष्णलीलाशुकः", "कालवधं चक्रे" इति नामन्युपलभ्येते